[1]न्यकाण्डकथ्यमाननिःशङ्ककरिकटविकटकण्डूतिना कतिप-
[2]यदिवसप्रसूतकुक्कुटीकुटीरीकृतकुटजकोटरेण चटकसञ्चा-
[3]र्यमाणचटुलवाचाटचाटकैरक्रियमाणचाटुना सहचरीचा-
रणचुञ्चुचतुरचकोरचुञ्चुना शैलेयसुकुमारतरशिलातलसु-

---

बहा। लाल कटसरैया इति भाषायाम्। विसरः समूहः। मुचु-
कुन्दो वृक्षभेदः।

मुचुकुन्दो वृक्षभेदे मुनिदैत्यविशेषयोः।

इति विश्वः। कटः गण्डस्थलः।

कतिपयदिनप्रसूतकुक्कुट्या कुटीरीकृतं कुटजकोटरं नि-
ष्कुटो यत्र तेन। चटकः कलविङ्कः। चटकः कलविङ्कः स्यात्।
पुमपत्ये चाटकैर इति द्वयोरमरः। चटकाया ऐरक्। वाचाटो
बहुभाषी। आलजाटचौ बहुभाषिणीत्याटच्।

सहचरीणां सञ्चारणेषु चुञ्चुभिर्वित्तैश्चतुरचकोरैः पक्षिभि-
श्चुञ्चुना वित्तेन। तेन वित्तश्चुञ्चुप्चणपौ।

शैलेयम्। कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु। शैले-
यमित्यमरः। शिलाजित इति ख्यातः। शेफालिका सुवहा।
शेफालिका तु सुवहेत्यमरः। निवारीति ख्याता।

शिफा जटायां सरिति मांसिकायां च मातरि।

इति विश्वप्रकाशः। गौधेरः। गोधाया ढ्रगिति ढ्रगन्तः।

---

१ न्यकाण्डमथ्यमा A B F न्यकाण्डमथ्यमा C २ य॰ -कुटीरक A B E य॰ कुटीर- C इति अस॰ च। ३ र्य॰ -चटुला A B र्य॰ -चतुरचा E H

स्वप्नायितशशकशिशुना शेफालिकाशिफाविवरविस्रब्धविवर्तमानगौधेरराशिना निरातङ्करङ्कुना निराकुलनकुलकुलकेलिना कलकोकिलकुलकवलितसहकारकलिकोद्गमेन सहकारारामरोमन्थायमानचमरीयूथेन [1]श्रवणहारिसलीलगि[2]रिनितम्बनिर्झरनिनादनिद्राणमन्दायमानकरिकुलकर्णतालदुन्दुभिना समासन्नकिन्नरीगीतरवरज्यमानसत्त्वविसरेण

---

त्रयो गौधेरगौधारगौधेया गोधिकात्मजे ।

इत्यमरः । गोह इति ख्याता । रङ्कुर्मृगः । रङ्कुशम्बररौहिषा इत्यमरः । राशिः समूहः । स्यान्निकारः पुञ्जराशी इत्यमरः । रोमन्थायमानाः । चर्वितस्याकृष्य पुनश्चर्वणं रोमन्थः । कर्मणो रोमन्थतपोभ्यां वर्तिचरोरिति क्यङ् । ङित्त्वादात्मनेपदम् । चमरी मृगभेदः । श्रवणहारि सलीलं गिरिर्नितम्बानां निर्झरनिनादेन निद्राणं करिकुलं तस्य मन्दायमानः कर्णतालो दुन्दुभिर्यत्र तेन । रुरुर्मृगभेदः । यता हरिता श्यामा न तु शुष्का या हरिद्रा तद्वद्रज्यमाना । वराहपोतानां पोत्रपालिर्मुखाग्रपालिर्यत्र तेन ।

पोत्रं वक्त्रं मुखाग्रस्य सूकरस्य हलस्य च ।

इति विश्वप्रकाशः । पालिः पङ्क्तिप्रदेशयोरिति विश्वः । गुञ्जानां काकचिञ्चीनां पुञ्जे पुञ्जज्वालकजालं यत्र तेन ।

---

१ अ० -सलीलगि- A B  अ० -सलीडगि- C D  २ रि० -द्रामन्दम- A B C D F G

हतहरितहरिद्राद्रवरज्यमानवराहपातपोत्रपालिना [1]गुञ्जा-[2]पुञ्जगुञ्जज्जालकजालेन [3]दंशनकुपितकपिकपोतनखको-टिपाटितपाटलकीटपुटसङ्कुलेन[4] कुलिशशिखरखरनखर-प्रचयप्रचण्डचपेटपाटितमत्तमातङ्गकुम्भस्थलरुधिरच्छटाच्छु-[5]रितचारुकेसरभारभासुरकेसरिकदम्बेन महासागरकच्छो-पान्तेन कतिपयदूरं[6] गत्वातिचपलवीचिप्रचयतया ताण्ड-

---

गुञ्जापि पटहे प्रोक्ता काकचिञ्च्यां कलध्वनौ।

इति विश्वप्रकाशः।

जालकः कथितो घोण्टः कारण्डी चापि जालकः।

इत्युत्पलिनी।

घोण्टे कारण्डिकायां च जालकः परिकीर्तितः।

इति हारावली।

दशनेत्यादि। पाटलकीटः श्वेतरक्तः कीटविशेषः। कुलिशशिखरं वज्राग्रम्। केसरभारः स्कन्धकेशसमूहः। भासुरं दीप्तिमत्। भञ्जभासेति धुरजन्तः। कदम्बकं समूहः।

अतिचपलवीचिप्रचयतयातिचञ्चलतरङ्गसमूहतया। ताण्डवेपूद्दण्डो दोर्दण्डो भुजदण्डो यस्य तादृशः। खण्डपरशुः शिव-

---

१ गुञ्जाकुञ्ज- A B C E F G H गुञ्जापुञ्जकुञ्ज- D २ पु० -ज्जारक- C D E F पु० -जालेन D E F ३ दं० -कपिपोत- C D दं० -तपपेटकपा- D ४ -सङ्कटेन D ५ रितचारुतरके- A B ६ कतिपयपदानि D कतिपयाध्वानं E

[1]वोद्दण्डदोर्दण्डखण्डपरशुविडम्बनापण्डितं वारुणीविजयपताकाभिरिव शेषकुलनिर्मोकमञ्जुमञ्जरीभिरिव शशाङ्क-[2]परिशेषपरमाणुसन्ततिभिरिव लक्ष्मीलीलातर्पणधाराभिरिव[3] [4]जलदेवताचन्दनविच्छित्तिभिरिव फेनराजिभिरुपात्तरामणीयकमपरमिव गगनमवनिमवतीर्णमर्णवच्छलादुच्छलच्छीकरकणनिकरैर्नभस्वरान् मुक्ताफलैरिव[5] विलोभयन्तमभयाभ्यर्थनागतानेकसपक्षक्षितिधरभरितकुक्षिभागं सगरसुतशताखातमुत्खातपारिजातकमभिजातमणिरत्नाकरं करिमकरकु-

---

स्तद्विडम्बनापण्डितस्तदनुकरणपण्डितस्तम् । भुतेशः खण्डपरशुरित्यमरः । वारुणी वरुणस्येयम् । विजयपताकास्ताभिरिव । जलाधीशत्वादिति भावः ।

शेष इत्यादि । निर्मोकः । समौ कञ्चुकनिर्मोकावित्यमरः । सन्ततिः समूहः । लक्ष्म्या लीलार्थं क्रीडार्थं यदातर्पणम् । अद्-पन इति भाषायाम् । तद्धाराभिरिव । विच्छित्तिश्चमत्कारः । रामणीयकं रमणीयता ।

अपरमित्यादि । सगरो राजा । खातम् । खनु अवदारणे क्तः । जनसनेत्यात्वम् । पारिजातो देववृक्षः । अभिजातानां

---

१ वो॰ -दोःखण्ड- A C D E F　२ परिशेष- D　३ + सुरतबकुसुममाला॰भिरिव D　४ जल॰ -ताकुचचन्द॰ B C F　५ मुक्ताफलैरिव B G H

लसङ्कुलं [1]ग्रकुलकुलकवलनाभिलाषसञ्चरन्नक्रचक्रमस्तिमि-
ततिमिङ्गिलकुलं [2]कूलकन्दलीवलयाचलविलुलितवेलातरलि-
[3]तलवलीलवङ्गमातुलिङ्गगुल्मम् ऊर्मिमारुतप्रसारिततरलतोत्ता-
[4]लतालहिन्तालतालीतरलितजलमानुषमिथुनमृदितसलिल-
पुलिनबालशैवालं प्रवालाङ्कुरकोटिपाटितमुखखिन्नशङ्खनख-
शिखालिखिततटलेखं खगेश्वरगोत्रपत्त्ररथपटलकलिलं सलि-
लमध्याप्यनिर्मुक्तमन्दरमथनसंस्कारमिवावर्तभ्रान्तिभिः साप-

---

ग्रहङ्कारमां मणीनां रत्नानां चाकरः। करी जलचरो गजो मक-
रश्च। तयोः कुलेन। करिरूपमकरकुलेन वा सङ्कुलम्।

ग्रकुलो मत्स्यभेदः। नक्रः कुम्भीरः। अस्तिमितं चञ्चलम्।
तिमिं मत्स्यं गिलतीति तिमिङ्गिलः। मूलविभुजादित्वात् कः।
अचि विभाषेति लत्वम्। गिलेऽगिलस्येति मुम्। महामत्स्यस्य
कुलं यत्र तम्।

कूलमित्यादि। लवली लताभेद इति केचित्। फलमित्य-
परे। हरफारेवडीति प्रसिद्धम्। मातुलिङ्गको रुचकः। रुचको
मातुलिङ्गक इत्यमरः।

प्रवालो विद्रुमः। पाटितं विदारितम्। शङ्खनखाः क्षुद्र-

---

१ मकुलकव- A H म॰ -कवलाभि A B D म॰ -मचरन्नेकनक्रचक्र- C म॰ -मन्नक्र- A B C F G २ कू॰ -यावलोवि- A C H ३ त॰ -मातुलुङ्ग- C त॰ -मातुलुङ्ग- E F H इति ग्रन्थ॰ च। त॰ -गुल्म माय A C F G त॰ -मा-रुतमर्मर- D ४ ल॰ -तरलित सोलज A B H ल॰ -चरितज D

स्मारमिव फेनैः ससुरामोदमिव वेलाबकुलगन्धैः सरोषमिव गर्जितैः सखेदमिव निःश्वसितैः सभ्रुकुटीभङ्गुरमिव[1] तरङ्गैः सालानस्तम्भमिव रामसेतुना कुम्भीनसीकुक्षिमिव लवणोत्पत्तिस्थानं व्याकरणमिव [2]विततस्त्रीनदीकृत्यबहुलं राजकु[3]लमिव दृश्यमानमहापात्रं हस्तिबन्धमिव वारिगतानेकना-

---

शङ्खाः । क्षुद्रशङ्खाः शङ्खनखा इत्यमरः । खगेश्वरो गरुडः । अपस्मारो रोगः । सुरा मद्यम् । आलानं बन्धस्तम्भः । आलानं बन्धस्तम्भे इत्यमरः ।

कुम्भीनसी राक्षसी लवणस्तत्सुतः । व्याकरणमिव विततानि स्त्री स्त्र्यधिकारकार्याणि नदीसञ्ज्ञा तत्कार्याणि । कृत्यसञ्ज्ञाकार्याणि । बहुलं अथवा बहुलमित्यादि । पक्षे विततानां स्त्रीनदीनां पत्नीभूतानां नदीनां कृत्यैस्तरङ्गाधरपानरूपैर्बहुलम् ।

राजकुलमिव । महापात्रं महामात्यः । पक्षे पात्रं तीरद्वयान्तरम् । बन्ध बन्धने । अधिकरणे घञ् । हस्तिनो बध्यन्तेऽत्र हस्तिबन्धः । गजबन्धनस्थानमिव वारिगतैर्बन्धनरज्जुगतैस्तद्द्धैरनेकनागैर्गजैर्मुच्यमानफूत्कारम् ।

पानीये वारि विख्यातं वारि बन्धनरज्जुषु ।

---

१ -भङ्गमिव A B E २ —वितत- A B C F G H विस्तारितस्त्री D
३ हस्तिनिभिव A B C E F G

गमुच्यमानफूत्कारं विश्वामित्रपुत्रवर्गमिवाम्भोजचामरमत्स्यो-
पशोभितं सत्पुरुषमिव गोत्राश्रयं[1] साधुमिवाच्युतस्थितिरम-
णीयं सुनृपमिव[2] सज्जनक्रमकरं क्षतमन्युमिव करतोयाप्लुत-

---

इति धरणिः। वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवा-
रिभ्य इञितीञ्। पक्षे वारि जलम्। नागाः सर्पाः। अमरस्तु।
वारी तु गजबन्धनीति दीर्घान्तं बन्धनस्थानवाच्याह। तन्मते
तु नैतदुपपद्यते कोशान्तरेष्वेवमेव।

विश्वामित्रपुत्रवर्गमिव। अम्भोजैः कमलैश्चामरैर्वालव्यजनै-
र्मत्स्यदेशाधिपैः शोभितम्। पक्षेऽम्भोजचामरं शैवालम्।

शैवालं शैवलाम्भोजचामरं जलनीलिका।

इत्युत्पलिनी।

सत्पुरुषमिव गोत्रं वंशः। पक्षे पर्वतः। साधुमिवाच्युताभ्रष्टा
स्थितिर्मर्यादा तया रमणीयम्। पक्षेऽच्युतस्य विष्णोः स्थित्या र-
मणीयम्।

सुनृपमिव सज्जनानां क्रमकरं व्यवहारकरम्। पक्षे सज्जा
नक्रा मकरा यत्र तम्।

क्षतमन्युमिव क्षतक्रोधमिव करतोयेन पाणिस्थजलेनाप्लुतं
क्षालितं मुखम्। पक्षे करतोया नदी। करतोया सदानी-
रेत्यमरः।

---

१ गोत्राश्रय D  २ सुनृपतिमिव A B C E F G

मुखं विरहिणमिव चन्दनोदकसिक्तं विलासिनमिव नर्मदानुगतमुद्भूतकालकूटमपि [1]प्रकटितविषराशिमतिवृद्धमपि सुन्दरीपरिवृतकण्ठं[2] सुरोत्पत्तिस्थानमप्यसुराधिष्ठितं[3] जल-

---

विरहिणमिव चन्दनस्योदकेन सिक्तम्। पक्षे चन्दना नदीविशेषः। चन्दनसम्बन्धि जलं वा।

विलासिनमिव-नर्म क्रीडा तां ददति ताभिरनुगतम्। पक्षे नर्मदा नदी। नर्मदा सोमोद्भवेत्यमरः। उद्भूतः कालकूटो हालाहलो यस्मात् तमपि। प्रकटितो विषस्य क्ष्वेडस्य राशिर्येन तमिति विरोधः। विषं जलमिति परिहारः।

अतिवृद्धमतिस्थविरमपि सुन्दरीभिः स्त्रीभिः परिवृतकण्ठमिति विरोधः। अतिवृद्धं महीयांसम्। सुन्दरी वृक्षभेदः। कण्ठः समीपदेशः। इति परिहारः।

कण्ठो गले गलध्वाने समीपेऽपि प्रकीर्तितः।

इति विश्वः।

सुरायज्ञादयो मद्यं वा तदुत्पत्तिस्थानमपि ताभ्यामनधिष्ठितमिति विरोधः। यद्वा सुरस्य ब्रह्मण उत्पत्तिर्यस्मात् सुरोत्पत्तिर्विष्णुस्तस्य स्थानमपि। असुरैरधिष्ठितमिति परिहारः।

अचिन्तयदित्यादि। यद्यतो यत्सविधे राघवेणारण्यवियुक्ता

---

१ प्रकटवि C D २ परिहमोपकण्ठ B E परिसमोपकण्ठं C गतकण्ठ D -परिगतकण्ठ H ३ धिष्ठार्य A B E F -धिष्ठानस्थान D

निधिमपश्यदचिन्तयच्च । अहो मे[1] कृतापकारेणापि विधिनोपकृतिरेव कृता यदयं लोचनगोचरतां नीतः समुद्रः । तदत्र[2] देहमुत्सृज्य[3] प्रियाविरहाग्निं निर्वापयामि । यद्यप्यनातुरस्य [4]देहत्यागो न विहितस्तथापि कार्यः । न खलु सर्वः[5] कार्यमकार्यं वा करोति । इत्यसारे संसारे केन किं

कान्तां विना सोऽयं लोचनगोचरतां नीतः । तदत्र देहमुत्सृज्य शरीरत्यागं कृत्वा । तत्कृतकर्माचरणासामर्थ्यादिति भावः । प्रियाविरहाग्निं निर्वापयामि । तेनापि कान्तां विरहाग्नयाग्नि निर्वापितः । अहं तु शरीरमुक्तेरित्यर्थः ।

एति जीवन्तमानन्दो नरं वर्षशतादपि ।

इति प्राचीनगाथयात्मघातनिषेधाच्चाह । यद्यपीत्यादि । आतुरस्य तु मरणम् ।

दुश्चिकित्स्यैर्महारोगैः पीडितस्तु पुमानपि ।
प्रविशेज्ज्वलनं दीप्तं कुर्यादनशनादिकम् ॥

इत्यादि स्मृत्युक्तमेव ।

अवश्यं भाविनो भावा भवन्ति महतामपि ।
नग्नत्वं नीलकण्ठस्य महाहिशयनं हरेः ॥

अपथे पदमर्पयन्ति हि
श्रुतवन्तोऽपि रजोनिमीलिताः ।

---

१ — मे F H २ + चात्रैव D ३ देहमुत्सृज्यामि वि- A D E F H इति क्रम० च । ४ चात्मत्यागो C D ५ + सर्वं C D

या[1] न कृतम्। तथाहि। गुरुदारग्रहणं[2] द्विजराजोऽकरोत्। पुरूरवा ब्राह्मणधनतृष्णया[3] विननाश। नहुषः परकलत्रदोहदी[4] महाभुजङ्ग आसीत्। ययातिर्विहितब्राह्मणीपाणिग्रहणः

---

इत्यादिना भवितव्यताप्राबल्यं प्रत्यानयन्नाह। तथापीति। उभयमपि करोतीति भावः। अस्मिन्निति। किमकार्यं न कृतमित्यर्थः। द्विजराजश्चन्द्रः। गुरुदारग्रहणं बृहस्पतिभार्यायास्ताराया ग्रहणं तया सह सुरतं तत्र बुध उत्पन्न इत्यादिपर्वणि कथा। पक्षे द्विजराजो ब्राह्मणश्रेष्ठः श्रुतिस्मृत्याद्यध्ययनसम्पन्नः। गुरुदारग्रहणं गुर्वङ्गनागमनम्। पुरूरवा राजा वयःशेषे ब्रह्मस्वमहरणात् तत एव नष्ट इत्यपि भारते।

नहुषो राजा परकलत्रदोहदीन्द्राण्यां साभिलाषो महाभुजङ्गः सर्प आसीत्। कामुको दोहदी मत इति रत्नकोशः। वृत्रवधदोषदूषिते मघोनि नहुष इन्द्रपदे स्थितस्तत इन्द्राण्यां साभिलाषोऽभूत्। यद्यपूर्ववाहनारूढो मां समयोऽपयास्यसि तदा स्वीक्रियते मयेत्यभिहितो महर्षीन् याने नियुज्य सर्पसर्पेति त्वरमाणोऽगस्त्येन सर्पो भवेति शप्त इति हरिवंशे ब्रह्महत्या कामान्धतया महर्षिपीडनं चोत्क्रमनेन।

ययाती राजा कृतब्राह्मणीपाणिग्रहणः कृतदेवयानीपाणिग्रहणः पपात। तारुण्यादित्यर्थः। ययातिर्भृगुसुताया देवयान्याः

---

१ नाम C D H  २ -दारहरण A B C D F G H  ३ -धनस्य तृष्णया A [illegible]
४ इति अग० घ। ष्टदो A B E H  ष्टदेन C F G

पपात। [1]सुद्युम्नः स्त्रीमय इवाभवत्। सोमकस्य[2] प्रख्याता[3] जन्तुवधनिर्घृणता[4]। पुरुकुत्सः कुत्सित आसीत्। कुवलयाश्वोऽश्व-

---

परिचारिकायां शर्मिष्ठायामेषासक्तो देवयान्या भार्गवाय निवेदितस्तेन शप्तः। जरया भवेति। अतिकामुकत्वेन वयोन्तरप्राप्तिर्ध्वनिता।

सोमकस्यैतदभिधानस्य जन्तोस्तन्नाम्नः पुत्रस्य वधेन निर्घृणता। पक्षे जन्तवः शरीरिणः। सोमकस्य शतस्त्रीष्वेकस्यां जन्तुसञ्ज्ञः पुत्र उत्पन्नः। स कदाचित् पिपीलिकया दष्टोऽरुदत्। ततः सर्वास्तन्मातरोऽरुदन्। ततोऽन्तःपुरे महानाक्रन्द आसीत्। तत् श्रुत्वा राज्ञा पुरोहितः पृष्टः। सन्तु मे बहवः पुत्राः कथमिति तेन जन्तुर्हतो हुतश्च तद्धूमाघ्राणात् सर्वाः सगर्भाः संवृत्तास्ततः शतं पुत्रास्तस्याभवन्निति भारते। जन्तुर्जन्युशरीरिण इत्यमरः। एतेन त्रयो महापातकिनो वर्णिताः।

कुवलयाश्वो राजाश्वतरकन्यामश्वतराख्यनागकन्यामपि जहार। कुवलयाश्वो भार्यायां मदालसायां प्रमीतायामत्यन्तविक्लवः। तन्मित्राभ्यामश्वतरपुत्राभ्यां तद्वृत्तान्तः पित्र आख्यातः। पुत्रमित्रलाभ्मायानिर्मितां मदालसां तस्यार्पयत् सः।

---

१ प्रद्युम्न' A B D G इति मर० च। २ यमस्य A B G ३ + जगति D ४ + नाम A B

नरकन्यामपि [1]जहार। नृगः कृकलासतामगमत्[2]। नलं कलिरभिभूतवान्। शम्बरणो[3] मित्रदुहितरि [4]विक्लवतामगात्।

---

न भस्मसात् कृतः कोऽपि विप्रः केनापि भूतले।
आमह्यसृष्टेरित्येतदिक्ष्वाकोः सरमोदितः॥
मनुजो नागकन्यामप्याजहार मदालसाम्।
कामार्थिनां ध्वनयितुमिदमाह नृपात्मजः॥
अज्ञानादपि सञ्जातं पातकं फलति ध्रुवम्।
इति प्रदर्शयन्नाह नृगस्य कृकलासताम्॥

नृगो राजा। कृकलासतां सरटत्वमगमत्। सरटः कृकलासः स्यादित्यमरः।

नृगेण पुष्करे तीर्थे गा द्विजेभ्यो हृताः पुरा।
तत्राज्ञानाद्विजस्यैका कपिला मिलिताभवत्॥
अपराधादतस्तेन भूमः सरटतामयात्।

नलं राजानं कलिस्तुर्ययुगोऽभिभूतवान्।

कालेन कलिना योऽपि पुण्यश्लोकोऽति पीडितः।
इति संस्कारयन्नूचे नलाख्यानं पुरातनम्॥

शम्बरणो मित्रदुहितरं प्रति सूर्यसुतां प्रति। पक्षे मित्रस्य सुहृदो दुहितरम्। स्पष्टम्।

---

१ पतिजहार C  २ -मगात् C D H  ३ सम्बरो A B C D E F G H संवरणो इति क्रम॰। ४ प्रकृतिविह्वलितामगात् A B E F G

दशरथ[1] इष्टरामोन्मादेन[2] मृत्युमवाप। कार्तवीर्यो गोब्राह्मणपीडया पञ्चत्वमयासीत्[3]। युधिष्ठिरः समरशिरसि सत्यमुत्ससर्ज। [4]शान्तनुरतिव्यसनाद्विपिने[5] विललाप। इत्थं नास्त्यकलङ्कः कोऽपि[6]। तदहमपि देहं त्यजामि[7]। इति वि-

---

दशरथ इति। मृगयायां हतस्य तपस्विनः पित्रोर्यथा पुत्रवियोगादावयोर्मृतिरेवं पुत्रशोकान्मृतिस्तेऽस्तु। इति शापाद्रामवियोगेन मृतिः। मृगयामक्तिव्यसनेन तपस्विवधोऽपि ध्वनितः।

कार्तवीर्यः सहस्रबाहुर्गोर्जमदग्निगोर्ब्राह्मणस्य जमदग्नेः पीडया मृतः।

अनेनैवापराधेन रामेण निहतोऽर्जुनः।

युधिष्ठिर इति। शान्तनुरिति।

शोकान्मृतिर्हपोत्सर्गो वने च परिदेवनम्।

कन्दर्पकेतुः स्वकृतावुपष्टम्भकमुक्तवान्॥

तदहमपि देहं त्यजामीति विचिन्त्य पुलिनमाममादेत्यन्वयः।

कुररा उत्क्रोशास्तेषां खरनखरशिखरैः खण्डितपृथुरोमविलं झषबिलम्। उत्क्रोशकुररौ समौ। पृथुरोमा झषो मत्स्य इत्यमरः।

---

१ -रथो इष्ट- A B F २ -मवियोगोन्मादेन E -भरतो रामोन्मादात् इति क्वचि॰। ३ + ममु॰ सुवर्णस्यना भगाम C F ४ शन्तनु- A C F H ५ -व्यसनाद्विपिने A F H ६ + प्राप C ७ देहत्यागेन कष्टहो मवामि C

चिन्त्य [१]कुररखरनखरशिखरखण्डितपृथुरोमविलमविरलश-[२]कुलकुलशल्कजलनकुलोच्चारं[३] [४]क्रोष्टुकुलोत्कृष्टविकटक-[५]र्कटकर्परपरम्परापरिगतोपान्तमतितरलतरजलरयलुलितच-टुलशफरकुलकवलनकृतमतिनिभृतवकशकुनिनिवहधवलि-[६] [७]तपरिसरमतिचपलजलकपिकुलविहरणलुलितसलिलकण-

---

अविरलानि शकुलकुलस्य मत्स्यविशेषकुलस्य शल्कानि यत्र । तादृशा जलनकुलानामुच्चारा यत्र तत् । शल्को शकलवल्कले इत्यमरः । उच्चारावस्करौ शमलं शकृदिति च ।

क्रोष्टुकुलोत्कृष्टाः शृगालकुलत्यक्ताः विकटाः कर्कटानां कर्परपरम्पराः कपालपरम्परास्ताभिः परिगतोपान्तं व्याप्तप्रान्तम् । स्यात् कर्परः कपालोऽस्त्रीत्यमरः ।

अतितरलजलस्य रये वेगे लुलितं चटुलं यत् शफरकुलम् । तत्कवलने कृतमतिरतएव निभृतो मन्दचेष्टाशून्यो वकशकुनिनिवहस्तेन धवलितपरिसरम् ।

अतिचपलेति ।

शिशुमारो जलकपिस्तन्दुकी चाम्बिपुच्छकः ।

---

१ कु॰ -नष्टपुलश- B D　२ कुलशल्काकमपाङ्कुलज- A B　कलपङ्कुलज- C कुलशल्कपङ्कुलज D H इति अग॰ च नर॰ च । कुलशकलपङ्कुलश- L F कु॰ -नकुलकुलो- A B C D E F G H इति नर॰ च । ३ -रम A B F -लोच्छारं D -लोत्तारं इति नर॰ ।　४ क्रो॰ -विकलमर्कं C　५ कं॰ गतप्रान्त B C D F G H कं॰ -ततरलरक- A B F G　६ -हरवलित D　७ त॰ गतिसमुद्दित-A B F G H

[१]निर्झरजनितपवनरयपरिमिलितशिशिरतरमनुदिवसनिपत-
दतितरुणवनमहिषगवलशिखरलिखितविषमतटमनवरतचर-
दसितमुखचरणविहगनिवहमधुरनिनदमुखरितमहिमकरच-

---

इति हारावली।

अनुदिवसं निपतन्तोऽतितरुणा वनमहिषास्तेषां गवलशि-
खरैः शृङ्गाग्रैर्लिखितानि विदारितानि तैर्विषमतटम्। गवलं
माहिषं शृङ्गमित्यमरः। अत्र गवलप्रयोगे यद्वक्तव्य तदन्य-
त्रोक्तम्।

अनवरतं चरन्तोऽसितमुखचरणा धार्तराष्ट्रास्तेषां निवह-
स्तस्य मधुरनिनदैर्मुखरितम्।

राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः।
मलिनैर्मल्लिकाख्यास्ते धार्तराष्ट्राः सितेतरैः॥

इत्यमरः।

अहिमकरः सूर्यस्तस्य चरणैरिव किरणैरिव रुचिरं भा-
सुरं जलमनुजानां जलमनुष्याणां शयनेन मुदितं जलगतं
जलान्तर्गतं धरणितलं यत्र। यद्वा। अहिः सर्पो मकरो ज-
लजन्तुभेदस्तयोश्चरणेन भ्रमणेन रुचिरं पोताधानादिरहितं
जलजमनुजशयनेन मुदितं जलधरणितलं यत्र।

---

१ निकरघनितमद- D नि॰ -पवनपरि- D E H नि॰ -शिशिरतमम- D E
नि॰ -शिशिरतटम- H

[1]रणरुचिरजलमनुजशयनच्छदितजलधरणितलमतिबहलम-
[2]दजलशबलकरटतटकरिवरशतनिपतितमधुकरविरुतरतिक-
[3]रमतिजवनपवनविधुतजलधिजलपटलविनटननिपतितमणि-
गणपरिगतपरिसरं जलनिधिभुजगनिर्मुक्तनिर्मोकपट्टमिव
दर्पणमिव वसुन्धरायाः स्फटिककुट्टिममिव वरुणस्य विपुलं
पुलिनजलमाससाद।

ततः कृतस्नानादिर्जलमवतरितुमारेभे शरीरत्यागाय।
अथ सानुशयेषु शाक्येषु निर्मत्सरेषु मत्स्येष्वक्षुद्रेषु क्षुद्रेषु वत्स-

---

अतिबहलमदजलशबलः करटो गण्डो येषां तादृशकरि-
वरशतेषु निपतितमधुकराणां विरुतिभिः शब्दै रतिकरम्।
काकेभगण्डौ करटावित्यमरः। कट इत्यपि पाठोऽर्थस्त्वभिन्नः।

अतिजवनोऽतिवेगवान् पवनस्तेन विधुतजलधिजलपटला-
न्निपतितो मणिगणो यत्र तादृशः परिसरो यस्य तम्। जवनस्तु
जवाधिक इत्यमरः।

जलनिधीत्यादि। ततः इत्यादि। आकाशसरस्वती आ-
काशवाक् समुदचरदुत्थिता अकर्मकत्वादुदश्चर इत्यात्मनेपदं न।

---

१ र॰ -सलमतिशयमुदितजलधरनिकरमतिबहल A B २ द॰ -रगत-
शयप A द॰ -रगतशयभतलप- B D द॰ रशयननिप C द॰ धुकरनि-
करमधुरवि- A B Γ द॰ -धुकरमधुरवि- D ३ र॰ धुतजलवि- A B C D
E F G H र॰ -पतितसमालगण- D

लेषु कच्छपेष्वक्रूरेषु नक्रेष्वभयङ्करेषु मकरेष्वमारेषु शिशुमारेष्वाकाशसरस्वती[१] समुदचरत्। आर्य कन्दर्पकेतो पुनरपि तव[२] प्रियया सह सङ्गमो [३]भविष्यत्यचिरेण तद्विरम मरणव्यवसायादिति। तदुपश्रुत्य मरणाद्विरराम[४]। पुनः [५]प्रियया समागमेच्छया शरीरस्थितिहेतुमाहारं[६] [७]चिकीर्षुर्महासागरकच्छोपान्तभुवं[८] जगाम। अथ [९]तत इतः परिभ्रमन् फलमूलादिना वने[१०] वर्तमानः[११] कियन्तं कालं निनाय कन्दर्पकेतुः।

एकदा[१२] कतिपयमासापगमे[१३] काकलीगायन[१४] इव

---

तत्स्वरूपमाह। आर्येत्यादि। एकदा वर्षासमय आजगामेति सम्बन्धः। काकलीगायनः कलसूक्ष्मगायनस्तद्वत्। सन्नद्धं निम्नं नीचं गभीरं वागानन्दं ददाति तादृशः। पक्षे सन्नद्धाः परिपूर्णपात्राः निम्नगा नद्यो नदाश्च यत्र। काकली तु कले सूक्ष्मे। निम्नं गभीरं गभीरमिति द्वयोरमरः।

---

१ आकाशात् सरस्वती A B D F H २ — तव E F ३ भविष्यतीत्य A B E G H ४ विरराम मरणारम्भात् C D L ५ प्रियासमागमाशया C D ६ -हतुभूतमशन C D ७ चिकीर्षुः कच्छो C D ८ -वनभुवं B ९ तत्र च C D १० — वने A E F H ११ वर्तमानः C D F H १२ + अपि A B + तु C D L H १३ पतिपयमासापगमे A B F H १४ -गीयमान B F H

[1]सन्नद्धनिम्नगामदः सन्ध्यासमय इव नर्तितनीलकण्ठः कुमारमयूर इव समूढशरजन्मा महातपस्वीव प्रशमितरजःप्रसरस्तापस इव धृतजलदकरकः प्रलयकाल इव दर्शितानेकतरणिविभ्रमो[2] निरुपद्रुतकाननोद्देश[3] इव [4]घनोत्स-

---

नीलकण्ठः शिवः। पक्षे मयूरः। कुमारमयूर इव समूढः शरजन्मा षडाननो येन। पक्षे समूढानां पुञ्जीभूतानां शराणां जन्म यत्र।

समूढः पुञ्जिते भुग्ने सद्योजाते धृतेऽपि च।

इति विश्वः।

रजो धूलिः। पक्षे द्वितीयो गुणः। तापस इव तपस्वीव धृतो जलदो जलप्रदः करकः कमण्डलुर्येन। पक्षे धृता जलदाः करका वर्षोपला येन।

करका मेघपाषाणे करका च कमण्डलौ।

दाडिमेऽपि च करकः करो च करकः स्मृतः॥

इति विश्वः। वर्षासु करकावर्णनं कविसम्प्रदायः।

प्रलयकाल इव दर्शितोऽनेकतरणीनां सूर्याणां विभ्रमो येन। पक्षे तरणिर्नौः। स्त्रियां नौस्तरणिस्तरिरित्यमरः। विभ्रमो भ्रमणम्।

निरुपद्रुतकाननोद्देश इव घनमत्यन्तं घना वोत्सुकिताः

---

१ सन्नद्ध A B C D E F G H २ विक्रमो A F ३ काननप्रवेश A B -काननप्रदेश F G ४ घनघमुत्सु A B F G H

कितसारङ्गो रेवतीकरपल्लव इव हलिधृतिकर[1] आजगाम वर्षासमयः। निर्भिन्नमेघनीलोत्पलकानने क्रीडासरसीव नभसि स्मरस्य रत्ननौकेव [2]जलदलक्ष्मीमातङ्गकन्यानर्तनरज्जु-

---

सारङ्गा हरिणा यत्र। पक्षे घनेन मेघेनोत्सुकिताः सारङ्गाश्चातका यत्र।

चातके हरिणे पुंसि सारङ्गः शबले त्रिषु।

इत्यमरः।

रेवतीकरपल्लव इव हलिनो बलरामस्य धृतिकरो धैर्याधायकः। पक्षे हलिनां कर्षकाणां धृतिकरः प्रीतिकरः।

इन्द्रधनुर्लता रराजेति सम्बन्धः। निर्भिन्ने विकसिते मेघ एव नीलोत्पलकानने क्रीडासरसीव नभसि कुसुमशरस्य रत्ननौकेव रत्नजटितनौकेव जलदलक्ष्मीव मातङ्गस्य चण्डालभेदस्य कन्या सैव नर्तकी तस्या रज्जुः समाकर्षणरज्जुः। चण्डालकन्या रज्जुमवलम्ब्य नृत्यति।

चण्डालप्लवमातङ्गदिवाकीर्तिजनङ्गमाः।

इत्यमरः।

नभ इति। प्रवसता निदाघेनोष्णोपगमेन स्मरणाय दिवो द्योः पयोधरे स्तने मेघे च दत्तानि नखक्षतानीव।

---

[1] + रावण इव मकेषमादो विन्ध्यगिरिरिव सघन C [2] जल० -लंमरकत० A II D F G.

रिव नभःसौधतोरणमालिकेव प्रवसता[1] निदाघेन दिवः पयोधरे दत्ता स्मरणाय[2] नखक्षतावलीव गगनलक्ष्मीरत्नरसनामालेव [3]नभोमन्दारतरुसुन्दरकलिकामालेव[4] रतिनखमार्जनरत्नशलाकेव रत्नशुक्तिरिव कुसुमकेतोरिन्द्रधनुर्लता रराज। अतिवेगनिपीतजलधिजलशङ्खमालामिव ब-

---

चिरोत्पन्नप्रवासेन प्रीतिर्गच्छेत् पराभवम्।
रागायतनसंस्मारि यदि न स्यान्नखक्षतम्॥

इति कामतन्त्रम्। निदाघ उष्णोपगमः। द्योदिवौ द्वे स्त्रियामभ्रमित्यमरो द्वयोः।

गगनलक्ष्म्या रत्नरसनेव काञ्चीव।

स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा।

इत्यमरः। नभोमन्दारस्य देवतरुविशेषस्य सुन्दरकलिकामालेव।

रतिरित्यादि। अतिवेग इति शङ्खपाने हेतुः। बलाकाच्छलाद्बकपङ्क्तिकामिषादूर्ध्वमण्डलदेशेऽदृश्यत। बलाका बिसकण्ठिकेत्यमरः। बकजातिविशेषः। कैतवापह्नुतिरलङ्कारः।

कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुते पदैः।

इति लक्षणात्।

---

१ प्रसारिता D   २ — स्मरणाय C D E F   ३ न॰ °न्दारसु- C D E G H न॰ °तरुकुसुमक- B C G H   ४ °न्दरमञ्जरीलेखेव A °न्दरमञ्जरीव D °न्दरकलिकालेखेव F

[1]लाकाच्छलादुद्गमन्नदृश्यत जलदः। [2]पीतहरितैः कृष्णासु[3] केदारिकाकोष्ठिकासु [4]समुत्पतद्भिर्जतुशबलैरिव दर्दुरैर्नयद्यूतैरिव[5] चिक्रीड वर्षाकालः। रविदीपकज्जलनिचयनिभे निकषोपल इव [6]मेघसमयसुवर्णकारनिकषितसुवर्णलेखेव तडिदशोभत[7]। विरहिणां हृदयं विदारयितुं

---

कृष्णासु सितासु सदूर्वास्वित्यर्थः। जातिद्वयसद्भावाद्विशेषणसार्थक्यम्। क्वचित् कृष्टास्विति पाठस्तत्र हलसंस्कृतास्वित्यर्थः।

. केदारिका एव कोष्ठिकास्तासु। केदारकोष्ठाभ्यामल्पत्वे कनि रूपम्। कियारीति भाषायाम्। वस्त्रादिनिर्मितं क्रीडासाधनं स्थलविशेषः। कोठा इति च।

पीतहरितैस्तद्वर्णैर्जतुशबलैर्लाक्षाचारकैः। नयो युद्धनीतिस्तच्छिक्षकैर्द्यूतैश्चतुरङ्गैश्चतुरङ्गसाधनेषु सवणा नयद्यूतसाधनभूतैर्हस्त्यश्वादिभिरिव समुत्पतद्भिर्दर्दुरैर्भेकैः कालश्चिक्रीड। जतुपैरिति पाठे विकारे त्रपुजतुनोः षुगित्यण् षुगागमश्च।

रविरिति। निकषोपलमाकषः। आकषो निकषोपलम्। कसौटीति भाषायाम्।

विरहिणामिति। करपत्रं क्रकचम्। क्रकचोऽस्त्री करपत्र-

---

१ छ० -मन् ममद- D २ चावीत A B C F ३ लष्टासु A B D इति जग० च मर० च। ४ स० -जंतुपय A B D F H इति जग० च। ५ दर्दुरैर्भंजकैरिव A B D F G H दर्दुरैर्विद्युता सर्व नखद्भूते C E इति जग० चे। ✝ मारोधिरिव C ६ प्रावट्सु- A -मेघ समय- D मेघ प्रावट्सु- F मेघगन्धर्व- H ७ -इराजत D E

करपत्रमिव कुसुमायुधस्य क्रकचच्छदमशोभत। जलद-
दारुणि लोलतडिल्लताकरपत्रदारिते[1] पवनवेगनिर्धूताश्चूर्ण-
चया इव जलरेणवो बभुः। विच्छिन्नदिग्वधूहारमुक्ता इव
खरपवनवेगभ्रमितघनघरट्टघट्टनसञ्चूर्णिततारानिकरा इव
[2]त्रिभुवनविजिगीषोर्मकरध्वजस्य प्रस्थानलाजाञ्जलय इव
करका व्यराजन्त[3]।

[4]अनन्तरमखञ्जखञ्जरीटेऽकुञ्चितकोम्बसञ्चारे [5]निर्भर-

---

सित्यमरः। आरा इति भाषायाम्। क्रकचपत्रं केतकपुष्पम्।

द्रोणीदलं सूचिपुष्पं जम्बालं क्रकचच्छदम्।

इति धारावली। लोलतडिल्लताकरपत्रदारिते जलददारुणि मेघकाष्ठे पवनवेगनिर्धूताः कम्पिताश्चूर्णचया इव जलरेणवः शीकरा बभुः शुशुभिरे।

विच्छिन्नेति। घनो मेघ एव घरट्टः। जाता इति भाषायाम्। पुरुषप्रेरणानिरपेक्षो जलादिरयभ्रमणशीलः। करका वर्षोपलाः।

अनन्तरं शरत्समयारम्भे कन्दर्पकेतुः शिलातर्पो पुष्पिका

[1]भारद्वाजद्विजवाचाटविटपे पटुप्रभप्रभाते भ्रान्तशुककुलकलमकेदारे प्रवेशितावेशिकराजहंसे [2]कंसारातिदेहद्युतिद्युतले [3]हंसद्वलतुलितजरज्जलमुचि सान्द्रीकृतेन्द्रमहकामुक-

---

पाञ्चालिकां मम प्रियानुकारिणीयमिति तां करेण पस्पर्शेति सम्बन्धः।

शरदं वर्णयन्नाह। अखण्डाः सन्ततयः। खजि गतिवैकल्ये। अकुञ्चिते विस्तृते निर्भरं भारद्वाजद्विजैर्वाचाटविटपे। भारद्वाजवाचाटत्वं विटपेष्वारोप्यते। तेन लक्षणानामालङ्कारोऽत्र।

साक्षादनभिसम्बन्धात् सम्बन्धिषु परिग्रहः।

यत्र सा लक्षणा नाम।

इति कण्ठाभरणे। पटुप्रभं सुन्दरं प्रभातं यत्र। भ्रान्तं भ्रमणविशिष्टं शुककुलं तादृशं कलमानां शालीनां केदारं क्षेत्रं यत्र। प्रवेशिता आवेशिका आगन्तवो राजहंसा यत्र। स्युरावेशिक आगन्तुरित्यमरः।

कंसारातिदेहद्युति कृष्णशरीरतुल्यकान्तौ द्युतले हंसवत् द्वलं हंसद्वलं तत्तुलिते जरज्जलमुचि पुराणमेघे जलसंयोगकृतं नवलं जलवियोगकृतं शरत्त्वं बोध्यम्। सान्द्रीकृता घनीकृतेन्द्रमहकामुकानां शुभां मुत् प्रीतिर्येन तत्र।

---

[1] भरद्वाजवा- CF भा० -द्विजरचितवा D [2] कंसारिदे- A B C D F G क० -द्युतिनिभंद्यु- A B G क० -द्युतिनिभमभस्तले D [3] हंसकुलतु- A B D H हं० -लितराजसलसमु- A B D E F G H

मुदि मधुरमधुल्वणवीरुधि [1]सुरससारसरसितसारकासारे [2]शोभनकसेरुकन्दलुब्धपोत्रिपोत्रोत्खाततटतडागे चकित-चातके [3]सञ्चरन्मत्स्यपुच्छिकापत्रिपटलमधुरध्वनिविच्छितमुदि कदर्थितकदम्बे कम्बुदिपि" प्रसृतविसप्रसूने विरलवारिदे

---

मृगदंशस्य शुनको ग्रामसूकरभेदकौ।
अस्थिभक्षश्च कपिलः स्यादिन्द्रमदकामुकः॥

इत्युत्पलिनी। मधुरा मधुल्वणवीरुद्यत्र।

खड्गपत्रो मधुल्वणमिक्षुर्मधुतरुर्मतः।

इत्युत्पलिनी। सुरसं सारसानां रसितं सारस्तलं यत्र तादृक् कासारः सरो यत्र तत्र। कासारः सरसी सर इत्यमरः।

शोभनकसेरुकन्दलुब्धानां पोत्रिणां वराहाणां पोत्रैर्घोणाभिरुत्खाततटास्तडागा यत्र तस्मिन्। कोलः पोत्री किरिः किटिरित्यमरः।

चकिताः स्तब्धाः संशयिता वा चातका यत्र। चक तृप्तौ प्रतीघाते च। सञ्चरदिति मत्स्यपुच्छिका जन्तुविशेषः। कदम्बो नीपवृक्षः। कादम्ब इति पाठः क्वचित्। कलहंसः। कादम्बः कलहंसः स्यादित्यमरः। बतक इति ख्यातः। प्रसृतानि विसप्रसूनानि कमलानि यत्र।

---

१ सरस D २ — शोभन- A C B E F H ३ मच्चरन्मत्स्य- A C D E F H मच्चरन्मत्स्यपुच्छिका- इति मन्ये। ४० -पत्रिका A B D F ४० -अनमुदि D E ५ कदम्बदिपि A B कम्बविदिपि C F

तारतरतारके [1]चारुचन्द्रमसि [2]स्वादुतरसरःसलिले स्फु-
रितशफरचक्रकवलननिभृतबकानीके[3] मूकमण्डूकमण्डले[4]
[5]सङ्कोचितकञ्चुकिनि[6] काञ्चनच्छेदगौरशालिशालिनि[7] क्रो-
शदुत्क्रोशे [8]सुरभिगन्धिसौगन्धिकगन्धवाहिहरिणाश्वे [9]कुमु-
दामोदिनि कौमुदीकृतमुदि निर्वर्हबर्हिणि निःकूजत्कोय-
ष्टिके [10]धूतधार्तराष्ट्रे हृष्टकलमगोपिकागीतसुखितमृगयूथे
कथीकृतयूथिके[11] [12]म्लायमानमालतीमुकुले[13] बन्धूकबान्धवे
सञ्जातसुजातके[14] विद्धचितसौत्रामधनुषि स्मेरकाश्मीररजः-

---

बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च।

इत्यमरः।

बकानीके बकसमूहे। मूको निर्वाक्। कञ्चुकी सर्पः। सौग-
न्धिकं कह्लारम्। सौगन्धिकं तु कह्लारमित्यमरः। हरिणाश्वो
वायुः। पृषदश्वो गन्धवह इत्यमरः।

कुमुदेत्यादि। निर्वर्हाः गलितपिच्छा बर्हिणो यत्र तत्र।
कलमगोपिका शालिसंरक्षिका। यूथिकामोदिति कथामात्र-

---

१ चारुतरच- D  २ स्वादुसरः- A B D E G  ३ -बलाभीके C D E G
४ -कुले A -पटले D  ५ सङ्कु- E H  ६ -किञ्चुकिनि C F -किंशुकके D
७ शालमालिनि A B C G -शालिकेदारे D  ८ सुरभिग- A D H सु-
-भिगन्ध- A D G H  ९ कुमुदामोदमो- C  १० धूर्दितधा- E धूतधर्तिधा- D
११ यूथके C  १२ म्लायितमाल- C म्लायन्माल- D म्ला- -तीमतीमुकुले C D
१३ -कुसुमे D -मकुले H  १४ -सपुत्रातके A B H -सपत्रच्छदे E H

पुञ्जपिञ्जरितदशदिशि [1]विकस्वरकमले शरत्समयारम्भे कन्दर्पकेतुः परिभ्रमन् शिलामयीं पुत्रिकां दृष्ट्वा कौतुकेन [2]मोहेन शोकावेगेन[3] मम प्रियानुकारिणीति करेण[4] पस्पर्श।

अथ[5] सा स्पृष्टमात्रा[6] [7]शिलास्वभावमुत्सृज्य [8]पुनर्वासवदत्तास्वरूपमापेदे। तामालोक्य कन्दर्पकेतुरमृतार्णवमग्न इव सुचिरमालिङ्ग्य पप्रच्छ। प्रिये वासवदत्ते कथय किमिदं वृत्तान्तम्। उदिता सती सा[9] दीर्घमुष्णं च निःश्वस्य कथयितुमारेभे।

आर्यपुत्रापुण्याया मम मन्दभाग्यायाः कृते महाभाग

---

शेफालिका। बन्धूको बन्धुजीवकः। रक्तकस्तु बन्धूको बन्धुजीवक इत्यमरः। दुपहरिया इति ख्यातः। विमुद्रिते सौवामधमधुपीति पाठस्तत्रस्थः। काश्मीरं कुङ्कुमम्। विकस्वरं विकसितम्। विकासी तु विकस्वर इत्यमरः।

अथेत्यादि। एकाकी असहायः। एकादाकिनचासम-

---

१ पुञ्जविकस्वरकुङ्कुमपरिकरकमले A B विकस्वरकमलकमले C विकस्वरकुङ्कुमे H २ मोहेन॰ A B मोहेन C ३ शोकावेगेन A B H वेगेन D शोकवेगेन इति क्वचित्। ४ कामिनीव A B ४ -रमिव C ५ अथ B अथ च C ६ स्पृष्टमात्रा C ६ — त्रा स्पृष्टमात्रा D E F G H ७ शिलामयीं मूर्तिमु- C ८ — पुनर् D H ९ दीर्घमुष्णम्। दत्युष्णं C

उज्झितराज्य एकाकी प्राकृतजन[1] इव वाङ्मनसयोरगोचरं[2] दुःखमनुवभूव। अथोपवासादिना[3] क्षामतरो मूलफलादिनार्यपुत्र आहारं[4] करोतीति विचिन्त्य फलान्वेषणायोपवनतरूनवलोकयन्ती[5] कतिपयमल्वगोचरमगच्छम्[6]। क्षणेन[7] च तरुगुल्मान्तरितक्रियमाणकायमानिकनिकेतनं[8] विरच्य-

---

हाये। एकाकी लेक एकक इत्यमरः। प्राकृतजन इव नीचजन इव। प्राकृतस्तु पृथग्जन इत्यमरः। वाङ्मनसयोरित्यचतुरेत्यच्प्रत्ययान्तो निपातः।

अथेत्यादि। अगच्छं याता। क्षणेन सेनासन्निवेशं सेनाशिविरं दृष्ट्वेति चिन्तयन्तीं मां प्रति सेनापतिर्धावित इति सम्बन्धः। तरुगुल्मान्तरितं क्रियमाणं रच्यमानं कायमानिकैः कमार इति प्रसिद्धैर्हीनजातिपुरुषैर्निकेतनं पटमण्डपं यत्र तम्।

निवेशः शिबिरोद्वाहविन्यासेषु प्रकाशितः।

इति विश्वप्रकाशः। विरच्यमानं विशेषेण रच्यमानमीश्वरस्य सेनापतेर्गृहं यत्र तम्।

---

१ जन E पृथग्जन D २ -रगोचरम A B ३ उपवासादिना A B D चनेकदिवसाहाराद्भून्यतया C ४ क्षामतरो निशायते। यदि किञ्चित् मिलति फलमूलादिकं तदा शरीरस्थितिः C क्षामतरननुनिंद्रान्ते फलमूलादिकमाहारं D ५ -वलोकय D — उपवनतरूनवलोकयन्ती E F H ६ -मोचरं वनमगच्छम् D -मल्पमगच्छम् E F H ७ क्षणेन A B C G ८ -कायमानिकनिकेतनं D G कायमानं C

[१]मानेश्वरगृह्मवतार्यमाणकण्ठारकमारभ्यमाणपटकुटीकं व्यवस्थाप्यमानवेश्यानिवेशं[१] श्रूयमाणतुरगह्रेषाशतं[१] वाद्य-[१]मानविश्रमढक्काशतपुष्करमन्विष्यमाणस्वादुसलिलाशयमुद्दि-

---

अवतार्यमाणमश्वादेर्भूमावुत्तार्यमाणकण्ठारकम् । कण्ठारकोति दाक्षिणात्यभाषायां प्रसिद्धम् । वस्त्रपात्रादिस्थापनार्थं वस्त्रादिनिर्मितं पात्रम् ।

व्यवस्थाप्यमानं यथास्थाने स्थाप्यमानम् । वेश्यानां निवेशो यत्र ।

श्रूयमाणं ह्रेषाशतं यत्र तम् । ह्रेषा ह्रेषा च निःस्वन इत्यश्वप्रकरणेऽमरः । अवत्यसमाधिः पूर्वमुदिता ।

वाद्यमानं विश्रमसूचकं ढक्काशतं पुष्करं वाद्यविशेषो यत्र तम् । दुन्दुभिविशेषो विश्रमशब्दस्तप्रइह एवेति स्पष्टं भाष्यप्रदीपे । स्यादयशःपटहो ढक्केत्यमरः ।

पुष्करं पङ्कजे व्योम्नि पयःकरिकराग्रयोः ।
औषधद्वीपविहगतीर्थराजोरगान्तरे ।
पुष्करं तूर्यवक्त्रे च काण्डे खड्गफलेऽपि च ।

इति विश्वप्रकाशः ।

श्यमानविपणिकेतुवंशं सेनासन्निवेशमपश्यम् ।[१] किमयं ममान्वेषणाय तातस्य व्यूहः[२] समायात आहोस्विदार्यपुत्रस्येति विचारयन्तीं मां [३]प्रति चारकथितवार्तः[४] सेनापतिर्धावितः। ततः किरातसेनापतिस्तादृश एव सेनान्वितो[५] मृगयागतः[६] सोऽपि धावितः। अनन्तरं चिन्तितं मया [७]यद्यहमार्यपुत्राय कथयामि तदा स एकाकीभिरेव[८] हन्तव्यो-

---

उद्दिश्यमान उत्पाद्यमानो विपण्यां पण्यवीथिकायां केतुर्यत्र। दिश अतिसर्जने। यद्वा उद्दिश्यमानः केतोरस्मिन् भागेऽस्मदीय आवास इति ज्ञापनार्थमुद्देशविषयीक्रियमाणः केतुर्यत्र। आहोस्वित् संशयेऽव्ययसमुदायः।

चारेण गूढपूरुषेण कथिता वार्ता वृत्तान्तो यस्मै। चारश्च गूढपुरुष इत्यमरः। तादृशश्चारकथितवृत्तान्तः किरातसेनापतिः।

भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः।

इत्यमरः।

मृगयाया आखेटार्थमागतः। आखेटो मृगया स्त्रियामित्यमरः।

अनन्तरं द्वयोरेकदेशागमनोत्तरम्। एकाकिपत्नुभयोः।

---

१ + ममग्रहोऽयाश्रमविन्यासम C + ततोऽहमेवाथविन्यासम् H  २ तातदूत E F  ३ प्रचार॰ E F  ४ + दूत A B D + मामुद्दिश्य C  ५ सेनानुगतो A B सेनापमन्वितो C सेनयान्वितो D  ६ मृगयायामागतः C  ७ यदाहं तदार्य॰ A B H  ८ एकाकी पतिरहमेव H

ऽद्य न कथयामि [1]तदैभिरहं घातनीयेति चिन्ताक्षण एव द्वयोः सेनयोर्युद्धमभवदेकामिषलुब्धयोर्गृध्रयोरिव । ततः [2]प्रवृत्तप्रतिशरासनशरासारदुर्दिनहतदिनकरकिरणे रण-

---

आमिषं पलले लोभे सम्भोगोत्कर्षयोरपि ।
आमिषं सुन्दराकाररूपादिविषयेऽपि च ॥

इति विश्वप्रकाशः ।

तत एवं रणखले सति । रणभूमौ धान्यमर्दनस्थान इति यावत् । योधाः सममेकैकावच्छेदेन द्विषां धनुषां च जीवस्य जीवायाः प्रत्यस्तापायाकृष्टिमाकर्षणञ्चक्रुरिति सम्बन्धः । अ-क्रमातिशयोक्तिरलङ्कारः । पूर्वनिपातप्रकरणमित्यत्वेऽत्यन्ता-तिशयोक्तिः ।

अत्यन्तातिशयोक्तिस्तु पौर्वापर्यव्यतिक्रमः ।

इति लक्षणात् ।

प्रवृत्तो यः प्रतिशरासनात् शत्रुधनुषः शरासारो बाणधा-रासम्पातस्तेन दुर्दिनं मेघच्छन्नदिनं तेन हतदिनकरकिरणे सति । गौणे आसारदुर्दिने । धारासम्पात आसारः । मेघ-च्छन्नेऽह्नि दुर्दिनमित्यमरो द्वयोः ।

---

१ तदात्मैवाभिवा- C तदैभिरेवाच नेतव्येति D २ प्रवितततरशरासारदुर्दिन-दिन- C प्रवितशरासारदुर्दिनदोनदिन- D

[१]कर्मविशारदद्विरददन्तद्वयोत्क्षिप्तसुभटक्षणस्त्रियमाणवि-
द्याधरविभ्रमे [२]समरदर्शनसञ्चरदनेकनभश्चरचारणच-
क्रवाले वेतालसमाक्रान्तस्कन्धकबन्धचक्रक्रियमाणचारु-
प्रचारे[३] [४]चारुभटखड्गखण्डितद्विरदपादसमाप्तपिशाचीक-

---

रणकर्मणि विशारदश्चतुरो द्विरदो हस्ती तेन दन्तद्व-
योत्क्षिप्तः सुभटः शूरस्तेन क्षणं स्त्रियमाण आश्रीयमाणो वि-
द्याधरविभ्रमो देवयोनिविशेषविशिष्टभ्रमो येन तस्मिन् सति।

समरदर्शनार्थं सञ्चरदनेकनभश्चरचारणानां देवकुशील-
वानां चक्रवाले मण्डले सति। चक्रवालं तु मण्डलमित्यमरः।
चारणाश्च कुशीलवाः।

चारुभटखण्डितद्विरदपादेन समाप्तं सम्यक् प्राप्तं पिशाच्याः
कर्णे यदुलूखलाभरणं तत्कौतुकं यत्र।

समुत्पतन्नतिनिबद्ध एव नान्दी नाटकादौ प्रयुज्यमानः
काव्यार्थसूचकः श्लोको यत्र। नद्यृतश्चेति कप्। न कपीति
ह्रस्वनिषेधः। तथाच भरतः।

आशीर्नमस्क्रियारूपश्लोकः काव्यार्थसूचकः।
नान्दीति कथ्यते।

---

१ क॰ -द्विरदकरदूरोत्क्षिप्त C क॰ -द्विरदकरदूरसमुत्क्षिप्त D H ख॰ प्रमुग्ध-
भरद्- C D २ समरदर्शनजातकुतूहल- A B ३ -चारुचारप्रचारे B C
— वेताल॰ -प्रचारे E F H ४ चा॰ -पादसमर्पितपि- A B C

णौलूखलाभरणकौतुके समुत्पतदनिनिनदनान्दीके[1] कान्दिशीकभीरुणि[2] रणखले [3]शृगालप्रार्थनीयेष्वामिषपिण्डेष्विव[4] जिह्मगदष्टेष्विव[5] शरीरेष्वनास्थां कलयन्तः[6] समं द्विषां[7] धनुषां च जीवाकृष्टिं[8] योधाश्चक्रुः। त्यागिन इव दानवन्तो मार्गणसम्पातमसहन्तः[9] सन्नद्धविलासिन इव शृङ्गारशोभिताः सहेमकक्षाश्च सदारामा इव कदलीराजिताः सद्विजाश्च निशा[10] इव नक्षत्रमालोपशोभिता दिवसा

---

कान्दिशीको भयपलायितः। कान्दिशीको भयद्रुत इत्यमरः। भीरुः। शृगाले जम्बुके भीरुः पुंसि वै दानवान्तर इति विश्वः। जिह्मगः सर्पः।

जीवा जीवन्तिकाभूम्योर्मौर्व्यां शिञ्जितवृत्तिषु।

इति विश्वप्रकाशः।

त्यागिन इव दातार इव दानं मदजलवितरणं मार्गणानां बाणानां याचकानां च सम्पातमसहन्तो महामृगा गजा रेजुः। महामृगः पुष्करिदीर्घमारुतौ इति हारावली।

---

१ समुत्पुच्छलविलि मदसदीके A B C H २ + प्रस्फुरज्जीवसजे प्रमोदप्रमभिलकालिनि C ३ शृगालवशा- A B H शृगालौशा- C D E F ४ — इव E F + वाहद्भोगेषु सर्पेष्विव C + वाहद्भजङ्गेषु दर्पेष्विव D ५ + सर्पेष्विव C D ६ कलयन्तः E F H ७ विद्विषां D ८ जीवाकर्षं च A B C D ९ इति भग० च। -भयमानाश A B C F G H १० निशा C D E F G H

इवोन्नसत्पुष्करा महास्तगा बभुः। उत्क्षिप्ता[१] इव चर्मा मुञ्चन्तः पयोधय इवावर्तशोभिताः सोर्मयश्चोद्यानदेशा इव समल्लिकाक्षाः कुलगृहा इवाभिनवभाण्डधारिणो रत्नाकरा इव सदेवमणयो लेखा इव सेन्द्रधृतय- स्तुरङ्गाश्च विरेजुः। कर्णाभ्यां श्रुतपरपरिवादाभ्यां[२] खलोदयसाधुविपत्तिसाक्षिभ्यामक्षिभ्यां[३] मूर्ध्ना चास्थानेऽपि नमता[४] "विमुक्तोऽहमिति हर्षादिव[५] ननर्त चिरं कबन्धः। ततः [६]कृतपरिहासेनेव चक्षुः[७] पिदधता परापवादश्रवण-

---

उत्क्षिप्ता इवाव्यवस्थितचित्ता इव चर्मा ग्लानिं हर्षौ च। तुरङ्गा अश्वा विरेजुः। कबन्धोऽपमूर्धकलेवरम्। इत्यमरः। इत्थं हर्षान्नमर्त।

श्रुतपरपरिवादाभ्याम्। परापवादाभ्यां साक्षी साक्षाद्द्रष्टा। साक्षाद्द्रष्टरि सञ्ज्ञायामिति साधुः।

अस्थाने महानर्हस्थाने नमता। ततो रजसा जजृम्भे· प्रादुर्भूतम्। जृभि. गात्रविनामे। भावे घः।

कृतपरिहासेनेव चक्षुः पिदधताच्छादयता। लोकप्रसिद्ध- मेतत्। वायुरान्तरो याह्यश्च। योधानां भटानां पलितङ्कर-

---

१ उत्सर्पिता C २ -परिवादकुपूरणिभ्यां A B F H ३ मेघाभ्यां मत्तालोकि- समाधुविपत्तिभ्यां C ४ चास्थानप्रणमता C ५ स्थानेऽपि C द्विधार्थे विभक्त इति A इति अमर० च। ६ — इव A B — हर्षादिव E F ७ — कृत० C मपरि- D E F ८ चक्षूंषि C G

भीरुणेव श्रोत्रवृत्तिं स्थगयता सोन्मादेनेव वायुवेगविक्षिप्तेन[1] पलितङ्करणेनेव सुरयोषितामन्धङ्करणेनेव[2] योधानां तिमिरेणेव समरप्रदीपस्य पतितेनेव विमुक्तगोत्रेण[3] मीमांसकदर्शनेनेव[4] निरस्ततदिगम्बरदर्शनेन सत्पुरुषेणेव विष्णुपदावलम्बिना [5]रणजेन रजसा [6]जजृम्भे ।[7] कश्चिद्राम इव रावणवधमकरोत् कश्चित् कृष्ण इव नरकच्छेदमकार्षीत् कश्चिद्बौद्धसिद्धान्त इव क्षपितश्रुतिवचनदर्शनोऽभवत् कश्चित् क्षपणक इव कटावृतो बभूव[8] कश्चिदाशङ्कितोरुभङ्गः सुयोधन इव पयसि विवेश[9] कश्चित् शरतल्पगतो[10] भीष्म इव

---

येन । पलितं जरसा शौक्ल्यमित्यमरः । आढ्यसुभगेति करणे ख्युन् अरुर्द्विषदिति मुम् ।

समरप्रदीपस्य रणरजनीमुखस्य । पतितेन इव महापातकिनेव विमुक्तगोत्रेण । गोत्रं वंशः । गोत्रा पृथ्वी । आशङ्कित ऊर्वोर्भङ्गो येन । पक्षे उरुमहान् भङ्गः पराजयः ।

शरतल्पं शरशय्याम् । चिराय । कार्तिकशुद्धदशमीमारभ्य

---

१ -प्रक्षिप्तेन D -उपक्षिप्तेन E F -अतिक्षिप्तेन H  २ -करणेनेव E F H  ३ + कुलपतितेनेव अवयवग्रामाभिना कलितेनेव हतधीव्याधविना राजभेनेव परविनष्टेन विमोहितेनेवाप्यकुलकेनाप्यमलेनेव पतनाकारेव C  ४ मीमांसकेनेव A B H  ५ रणरजसा A B  धनरजेन रजसा D  ६ विज- D  ७ + तत्र समरप्रभाटे B C + तत्र च समरप्रभाटे D  ८ — कश्चिद्राम इव रा० बभूव A D E F H + कश्चित् कुरुपति इव पतन D  ९ — कश्चिदा० विवेश C  १० न्यपतत् A B D E F G H इति अत० च ।

चिराय[1] श्वसन्नासीत् कश्चित् कर्ण इव [2]विक्लवीकृतसर्वाङ्गः शक्तिमोक्षमकरोत्। ततो विध्वस्तध्वजपटं पतत्पताकं च्युतचापचामरापीडं [3]स्खलत्खड्गं [4]निधनमवाप सैन्यम्।

अनन्तरं [5]यस्याश्रमस्तेन मुनिना [6]पुष्पादिकमादायागतेन प्रतिपन्नवृत्तान्तेन[7] त्वत्कृते ममायमाश्रमो [8]भग्नोऽतः शिला-

---

माघशुद्धाष्टमीपर्यन्तमित्युदयशङ्करपाठकाः। अत्रोपपत्तिस्तु तेषां कृतौ द्रष्टव्या। पक्षे चिराय चिररात्राय चिरस्येति चिरार्थका इत्यमरः।

विक्लवीकृतं विह्वलीभूतं सर्वाङ्गं यस्य। शक्तेर्बलस्य मोक्षं त्यागम्। पक्षे शक्तेर्वासवदत्ताया अमोघाया मोक्षं घटोत्कचे त्यागम्।

शक्तिरायुधभेदे स्यादुत्साहादौ बले स्त्रियाम्।

इति हेमचन्द्रः।

निधनं मरणम्। मरणं निधनोऽस्त्रियामित्यमरः। प्रतिपन्नवृत्तान्तेन ज्ञातवृत्तान्तेन। प्रपूर्वात् पदेः कर्मणि क्तः।

---

१ चिराय C २ विक्लवावधूतश्च C विक्लवीभूत- D ३ स्खलत्खड्गानुष्क C स्खलत्खड्गधनुष्कं D ४ ततः समस्तसैन्यमन्योन्यं निधनमवाप A B सैन्यमन्योन्यं निधनमवाप C ततः समस्तमिदानीं सैन्यो निधनं जगाम सैन्यम् D ५ यस्याश्रमस्तेन B D H ६ पु० -माहृत्याम A H पु० -माहर्तुं ग- H इति जम० च। ७ + योगहरा C ८ भग्न इति C D

मयो[1] भवेति शप्ताहम्। [2]क्षणेन च वराकीं बहुदुःखमनुभवन्तीं मां विलोक्यार्यपुत्रकरस्पर्शावधिं शापान्तमकरोत्।

ततः कन्दर्पकेतुः समागतेन मकरन्देन[3] वासवदत्तया च[4]

---

क्षणेन च वराकीं बहु दुःखं भवद्वियोगजमनुभवन्तीं मां विलोक्य शापं शिलामयत्वरूपम्। आर्यपुत्रस्य करस्पर्शोऽवधिरन्तोऽस्य तादृशमकरोत्।

नागरोक्त्यार्यपुत्रेति भार्योक्त्या च प्रयुज्यते।

इति भरतः।

ततः कन्दर्पकेतुः समं वासवदत्तासङ्गसमकालमागतस्तेन मकरन्देन वासवदत्तया च सह स्वपुरं कुसुमपुरं गत्वा हृदयं मनोऽनतिक्रम्य यथाहृदयं मनोऽनुरूपमभिलषितं येषु तानि सुखानि सम्भोगशृङ्गारसम्बन्धीन्यनुभवन् कालं निनाय। चेतो हृदयं स्वान्तं हृन्मानसं मन इत्यमरः।

वासवदत्तामधिकृत्य कृताख्यायिका वासवदत्ता। अधिकृत्य कृते ग्रन्थ इत्यर्थे वृद्धाच्छः। तस्य लुबाख्यायिकाभ्यो बहुलमिति लुप्। वासवदत्ताख्यायिका समाप्तेति पाठस्तु भ्रममूलकः।

---

१ + पुत्रिका मे A B  २ क्षणेन च वराकी बहुदुःखमनुभविष्यसीत्यार्य A क्षममर्दं वराकीव दुःखमनुभविष्यसीति करस्पर्श- C क्षणेन च वराकीव बहुदुःखमनुभवसीति करस्पर्शादहो मुनिरार्य D  ३ समागते मकरन्दे C ४ — च A B F G H

सह[1] स्वपुरं गत्वा [2]यथाहृदयाभिलषितानि[3] [4]सुखान्यनुभवन् कालं निनाय[5] ।

.इति [6]महाकविसुबन्धुविरचिता वासवदत्ता[7] समाप्ता ।

---

के न वासवदत्ताया अलङ्काराः प्रसाधकाः ।
दर्पणे के च नेक्षन्ते व्याख्याने वरभूषणे ॥
दोषः कृतौ सुमतयो मम कोऽपि चेत् स
युष्माभिरत्र कृपया विनिवारणीयः ।
आर्ताः खगाः समवलोक्य सवर्यबाधां
नि मक्षिका अपि क्षुवन्ति यतः समन्तात् ॥
त्रिलोकचन्द्रात्मजकल्पराम-
स्त्वनुक्तिपाठी शिवरामनामा ।
व्याख्यामकार्षं कृतिनः सुबन्धोः
कृतेरिमां काञ्चनदर्पणाख्याम् ॥

इति त्रिपाठिशिवरामरचिता ,दर्पणाख्या वासवदत्त

सम्पूर्णा ।

---

१ सम A — सह B २ यथाभि A यथाभि B H हृदयाभि C D E F G ३ + तानि तानि C ४ सुरतसुखा A B C D E F G ५ + इति C E ६ श्रीदरपचिभागिनेयमहा D ७ + ख्याख्यायिका A B C E F G + नामाख्यायिका D + भिधानाख्यायिका H

| पृ० | पं० | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| ३६ | २२ | -द्या | -द्या० |
| ३८ | ५ | येषाम | येषाम् |
| ४३ | १० | -मूर्ध क० | -मूर्धक० |
| ४८ | १४ | निश्चान्तर्व० | निश्चान्तप० |
| ४९ | १ | -रेष | -रैषु |
| ४६ | २ | कुर्वतीष | कुर्वतीषु |
| ५१ | २ | -नानच्च० | -नागुच्च० |
| ५१ | २१ | सुक चास० | सुकचास० |
| ६३ | १२ | चत्तु० | चत्तु० |
| ६४ | २ | दर्शनन | दर्शनेन |
| ७० | १३ | श्वपन: | श्वसन: |
| ७४ | १४ | निजकर० | निजकरि० |
| ७७ | १५ | कैयदान० | कैयदानन० |
| ७६ | १६ | असवश्चगा | असवश्चगा: |
| ७६ | १६ | वश्चगा | वश्चगा: |
| ७६ | १६ | असगा | असगा: |
| ८० | १ | -श्रत्य० | -श्रैत्य० |
| ८१ | १६ | सव्जन० | सव्जन |
| ८५ | १६ | रा० इति | निष्काशनीयम् |
| ८६ | १७ | रथां | रथी |
| ८७ | १ | -नगत: | -नुगत: |
| ८८ | १६ | इवारुया | इवारुया० |
| ८९ | २१ | -ष्टादवि० | -ष्टादवि० |
| ९४ | १ | यौयै: | यौयै |
| ९५ | २२ | सायन्तर० | सायन्तन० |

| पृ॰ | पं॰ | अशुद्धम्। | शुद्धम्। |
| --- | --- | --- | --- |
| ३६ | २२ | -द्दा | -द्दा॰ |
| ३८ | ५ | येयाम | येयाम् |
| ४३ | १० | -मूर्ध क॰ | -मूर्धक॰ |
| ४८ | १४ | निशान्तर्व | निशान्तयं॰ |
| ४९ | १ | -रेय | -रैयु |
| ४९ | २ | कुर्वतीव | कुर्वतीषु |
| ५१ | २ | -मानस्त॰ | -मानुष्य॰ |
| ५१ | २१ | सुक चार | सुकचार॰ |
| ६३ | १२ | चतुं॰ | चत्तु॰ |
| ६४ | २ | दर्शनन | दर्शनेन |
| ७० | १३ | श्वपनः | श्वसनः |
| ७४ | १४ | निजकर॰ | निजकरि॰ |
| ७७ | १५ | कोयदान॰ | कोयदानन॰ |
| ७९ | १९ | अमवश्गा | अमवश्गाः |
| ७९ | १९ | वश्गा | वश्गाः |
| ७९ | १९ | असगा | असगाः |
| ८० | १ | -ग्रत्य॰ | -ग्रैत्य॰ |
| ८१ | १९ | सव्जन॰ | सव्जन |
| ८५ | १९ | रा॰ इति | निष्काश्नीयः |
| ८६ | १० | रघौ | रघौ |
| ८७ | १ | -नगतः | -नुगतः |
| ८८ | १९ | इवाख्य | इवाख्य॰ |
| ८९ | २१ | -ष्यादवि॰ | -ष्यादवि॰ |
| ९४ | १ | यौयैः | यौयै |
| ९५ | २२ | सायम्तर॰ | सायन्तन॰ |

| पृ० | प० | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| २४१ | १७ | -लाञ्छित० | -लाञ्छि |
| २७५ | ४ | यस्या त्साम् | यस्यास्ता |
| २४७ | ५ | सग्रीव | सुग्रीव० |
| २५१ | ६ | दिग्भ्या | दिग्भ्यो |
| २५८ | ३ | क्षत | क्षतं |
| २६० | ३ | प्रचर० | प्रचुर० |
| २६० | १६ | -वं ै: | -वंशै |
| २६५ | ८ | कार: | -काय० |
| २६६ | १ | -मात० | -पोत० |
| २६८ | १ | मो ै: | मोनै० |
| २७२ | ८ | तेनाप्य | तेनाऽप्य |
| २८१ | ४ | घनोत्स- | घनोत्सु- |
| २८३ | १५ | वि | वि- |
| २९० | ० | -गाचरं | -गोचरं |
| २९३ | | त्वमन्ता- | त्वमन्ता- |
| २९८ | | -सप्राववि | सप्रावधिं |